॥ श्री राधासर्वेश्वरो विजयते ॥



॥श्रीमते निम्बार्कमहामुनीन्द्राय नमः ॥

# श्रीसुदर्शन कवचम्




: सम्पादक :

पं. श्री गोविन्ददास 'सन्त'

धर्मशास्त्री, पुराणतीर्थ



आद्याचार्य श्रीभगवन्निम्बार्कमहामुनीन्द्र

## मंगलाचरण :

राधासर्वेश्वरं वन्दे प्रणतार्ति प्रणाशनम् ।
भुक्ति-मुक्ति प्रदातारं पूर्णब्रह्म सनातनम् ।।
श्री मद्धंसकुमारांश्च नारदं मुनिपुङ्गवम् ।
निम्बार्कं श्री निवासं च प्रणमामि पुनः पुनः ।।

## श्री गुरु स्मरण् :

आनन्दमानन्द करं प्रसन्न
ज्ञानस्वरुपं निजभावयुक्तम ।
योगीद्र मीड्यं भवरोगवैद्यं
श्रीमद् गुरुं नित्यमहं नमामि ।।
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वर ।
गुरुः साक्षात्परंब्रह्म तस्मै श्री गुरुवे नमः ।।
अखण्ड मण्डलाकारं व्याप्तं येन चराचरम् ।
यत्पदं दर्शितं येन तस्मै श्री गुरुवे नमः ।।
अज्ञान तिमिरान्धस्य ज्ञानां जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्री गुरुवे नमः ।।

**।। श्री गुरु चरण कमलेभ्यो नमः ।।**

# अथ श्री सुदर्शन कवचम्



**विनियोग :-**

ॐ अस्य श्री सुदर्शनकवच-महामन्त्रस्य अहिर्बुध्न्यो भगवान् ऋषिः अनुष्टुप छन्दः श्रीसुदर्शन महापुरुषो विष्णुर्देवता, ॐ बीजम् ह्रीं शक्तिः, क्रौं कीलकम्, श्री सुदर्शन-प्रसाद-सिद्धि पुरस्सरं ममा भीष्ट-सिद्ध्यर्थे जपे विनियोगः।

**ऋष्यादिन्यासा :-**

ॐ अहिर्बुध्न्याय भगवते ऋषये नमः शिरसि।

ॐ अनुष्टुप्-छन्दसे नमो मुखे।

ॐ श्रीसुदर्शन-महापुरुष-विष्णु-देवतायै नमो हृदये।

ॐ ॐ बीजाय नमो गुह्ये।

ॐ ह्रीं शक्तये नमः पादयोः।

ॐ क्रौं कीलकाय नमः सर्वाङ्गे।

## दिग्बन्धनम् :-

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
प्राचीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
आग्नेयीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
याम्यां दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
नैर्ऋतिं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
वारुणीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
वायवीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
कौवेरी दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
ऐशानीं दिशं चक्रेण बध्नामि ।

ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
ऊर्ध्वां दिशं चक्रेण बध्नामि।
ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
अधो दिशं चक्रेण बध्नामि।
ॐ नमो भगवते ज्वाला-चक्राय ऐं ह्रीं
सर्वां दिशं चक्रेण बध्नामि।

**विनियोग :-**

अस्य श्रीसुदर्शन-षडक्षर-महामन्त्रस्य अहिर्बुध्न्यो भगवान् ऋषिः, अनुष्टुप् छन्दः, श्रीसुदर्शन-देवता, ॐ बीजम्, ह्रीं शक्तिः, क्रौं कीलकम्, श्रीसुदर्शन-प्रसाद-सिद्धि-पुरस्सरं ममाभीष्ट-सिद्ध्यर्थे जपे विनियोगः।

**ऋष्यादिन्यासा :-**

ॐ अहिर्बुध्न्याय भगवते ऋषये नमः शिरसि।
ॐ अनुष्टुप्-छन्दसे नमो मुखे।
ॐ सुदर्शन-देवतायै नमो हृदये।
ॐ ॐ बीजाय नमो गुह्ये।
ॐ ह्रीं शक्तये नमः पादयोः।
ॐ क्रौं कीलकाय नमः सर्वाङ्गे।

**कर-न्यासा :-**

ॐ सं आचक्राय स्वाहा अङ्गुष्ठाभ्यां नमः ।

ॐ हं विचक्राय स्वाहा तर्जनीभ्यां नमः ।

ॐ स्त्रां सुचक्राय स्वाहा मध्यमाभ्यां नमः ।

ॐ रं त्रैलोक्य-रक्षण-चक्राय स्वाहा अनामिकाभ्यां नमः ।

ॐ हुं ज्वाला-चक्राय स्वाहा कनिष्ठिकाभ्यां नमः ।

ॐ फट् असुरान्तक-चक्राय स्वाहा करतल-करपृष्ठाभ्यां नमः ।

**हृदयादि-न्यासा :-**

ॐ सं आचक्राय स्वाहा ज्ञानाय हृदयाय नमः ।

ॐ हं विचक्राय स्वाहा ऐश्वर्याय शिरसे स्वाहा।

ॐ स्त्रां सुचक्राय स्वाहा शक्तये शिखायै वषट्।

ॐ रं त्रैलोक्य-रक्षण-चक्राय स्वाहा बलाय कवचाय हुम् ।

ॐ हुं ज्वाला-चक्राय स्वाहा तेजसे नेत्रत्रयाय वौषट् ।

ॐ फट् असुरान्तक-चक्राय स्वाहा वीर्याय अस्त्राय फट् ।

**अक्षर-न्यासा :-**

ॐ ॐ नमो मस्तके। ॐ सं नमो भ्रु वोर्मध्ये।
ॐ हं नमो मुखे। ॐ स्त्रां नमो हृदि।
ॐ रं नमो गुह्ये। ॐ हुं नमो जान्वोः।
ॐ फट् नमः पादयोः। ॐ भूर्भुवः स्वरोमिति सर्वाङ्गे।

**ध्यानम् :-**

सुदर्शन महाज्वाल सूर्य-कोटि-सम-प्रभ।
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय ॥१॥
यस्य स्मरणमात्रेण विद्रवन्ति सुरारयः।
सहस्त्रार नमस्तुभ्यं विष्णु-पाणि-तलाश्रय ॥२॥
क्षिप्रं सुदर्शन चक्र ज्वाला-मालातिभीषण।
सर्व-रोग-प्रशान्तिं त्वं कुरु देववराऽच्युत ॥३॥
सुदर्शन महाज्वाल गोविन्द-स्वकरायुध।
तीक्ष्ण-धार महावेग कोटि-सूर्य-सम-प्रभ ॥४॥
त्रैलोक्यं रक्ष रक्ष त्वं दुष्ट-दानव-मर्दन।
सुदर्शन महाज्वाल छिन्धि छिन्धि महागदम् ॥५॥

छिन्धि वातं च पित्तं च छिन्धि घोरं महाविषम् ।
रुजं दाहं च शूलं च निमिषं जाल-गर्दभम् ॥६॥
सुदर्शनस्य मन्त्रेण ग्रहा यान्तु दिशो दश ।
चौर-व्यालादयो यान्तु सर्वबाधा प्रशाम्यतु ॥७॥

*(इति ध्यात्वा पञ्चोपचारैः सम्पूज्य सुदर्शन-षडक्षरमन्त्रम-ष्टोत्तरशतं सुदर्शन गायत्रीं च द्वादशवारं जपित्वा सुदर्शन-कवच-पाठं कुर्यात् ।)*

**श्रीसुदर्शन-षडक्षर-मन्त्र :-**

"ॐ सहस्त्रार हुँ फट्"

**श्री सुदर्शन-गायत्री-मन्त्र :-**

ओं सुदर्शनाय विद्महे, हेतिराजाय धीमहि, तन्नश्चक्रं प्रचोदयात् ।

**श्रीसुदर्शन-कवचम्-**

ॐ नमो भगवते भो भो सुदर्शन दुष्ट-दारिद्रयं दुरितं हन हन जहि जहि पापं मथ मथ ममाऽऽरोग्यं कुरु

कुरु ठः ठः ह्लीं ह्लीं ह्लां हुं ॐ सहस्त्रार हुं फट् स्वाहा ।
ॐ त्रैलोक्याभयकर्ता त्वमाज्ञापय जनार्दन ।
सर्व-दुःखानि रक्षांसि क्षयं नय च सत्वरम् ॥१॥
प्राच्यां रक्ष प्रतीच्यां च दक्षिणोत्तरयोस्तथा ।
रक्षां करोतु सर्वत्र नृसिंहस्य स्व-गर्जनैः ।
श्रीमहावैष्णव रक्ष, दुष्टान् हन हन फट् स्वाहा ॥२॥
ॐ सहस्त्रादित्य-संकाशं सहस्त्र-वदनं परम् ।
सहस्त्रदोः सहस्त्रारं प्रपद्येऽहं सुदर्शनम् ॥३॥
हसन्तं हार-केयूर-मुकुटाऽङ्गद-भूषणम् ।
भूषणोद्भासिताङ्गं च प्रपद्येऽहं सुदर्शनम् ॥४॥
स्त्राकारसहितं मन्त्रं जपतां शत्रु-निग्रहम् ।
सर्व-दोषस्य हर्त्तारं प्रपद्येऽहं सुदर्शनम् ॥५॥
रणत्किङ्किणीजातेन राक्षसघ्नं महाद्भुतम् ।
व्याप्तकेशं विरूपाक्षं प्रपद्येऽहं सुदर्शनम् ॥६॥
हुङ्कारं भैरवं भीमं प्रपन्नार्त्तिहरं प्रभुम् ।
धन-धान्य-प्रदातारं प्रपद्येऽहं सुदर्शनम् ॥७॥
फट्-कारान्तमनिर्देश्यं महामन्त्रेण संयुतम् ।
शिवं प्रसन्न-वक्त्रं च प्रपद्येऽहं सुदर्शनम् ॥८॥

एतैः षड्भिः स्तुतो देवो भगवान् श्रीसुदर्शनः ।
रक्षां करोतु सर्वत्र सर्वत्र विजयी भवेत् ॥९॥
सर्वस्मिन् वैष्णवे धर्मे प्रीतिं वर्द्धयतां सदा ।
सर्व-विघ्नान् समान् दोषान् विनाशयतु सत्वरम् ॥१०॥
ब्रह्मादिदेव-मुनि-वन्दित-पादपद्मं
चक्रादि-षोडशभुजं ज्वलन-प्रकाशम् ।
नानाविधाभरण-भूषित-चारुगात्रं
चक्रादिदेवमनिशं हृदि भावयामि ॥११॥

शङ्खं चक्रं गदाब्जे शरमसिमिषुधिंचाप-
पाशाङ्कुशाब्जान्
बिभ्राणं वज्र-खेटं हल-मुसल-
लसत्कुन्तमत्युग्रदंष्ट्रम् ।
ज्वाला-केशं त्रिनेत्रं ज्वलदनलनिभं
हार-केयूर-भूषं
ध्याये षट्कोण-संस्थं सकल-रिपु-जन-प्राण-
संहार-चक्रम् ॥

ॐ नमो भगवते महासुदर्शनाय
महोग्राय महाचक्राय
महामन्त्र-महावीर-महातेजो
भयङ्कराय सर्वदुष्ट-भयङ्कराय
सर्वशत्रून् ग्रस ग्रस भक्ष भक्ष,
परमन्त्रान् ग्रस ग्रस भक्ष भक्ष,
परतन्त्रान् ग्रस ग्रस भक्ष भक्ष,
पर-विद्यां ग्रस ग्रस भक्ष भक्ष,
दैत्यान् ग्रस ग्रस भक्ष भक्ष,
पर-शक्तिं ग्रस ग्रस भक्ष भक्ष,
मूढान् ग्रहान् ग्रस ग्रस भक्ष भक्ष,
दैत्य-दानव-राक्षसान् ग्रस ग्रस भक्ष भक्ष,

गन्धर्व-यक्ष-भूत-प्रेत-पिशाचान् ब्रह्मराक्षसादीन् ग्रहान् ग्रस ग्रस भक्ष भक्ष, दह दह, मर्दय मर्दय, छिन्धि छिन्धि, भिन्धि भिन्धि, खादय खादय, कालय कालय, कुरु कुरु हुँ फट् स्वाहा ।
ॐ श्रीचक्राय सुदर्शनाय स्वाहा ।

**प्रार्थना :-**

भूम्यां च ह्यन्ततिरक्षे च पार्श्वत: पृष्ठतोऽग्रत: ।
रक्षां करोतु भगवान् विश्वरुपी जनार्दन: ।।
यथा विष्णो: स्मृते: सद्य: संक्षयं याति पातकम ।
तथैव सकलं दु:खं प्रशाम्यतु सुदर्शन: ।।

**फल-स्तुति :-**

इदं वर्म पवित्रं वै सर्वथा भय-नाशनम् ।
सर्वाभीष्ट-प्रदं सद्य: सर्व-रोग-निवारणम् ।।

इति श्रीसुदर्शन-सहितान्तर्गतं
सुदर्शन-कवच सम्पूर्णम् ।

**श्रीराधागोपालार्पणमस्तु**

## साष्टांग प्रणाम्

उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्या कराभ्यां जानुभ्यां प्रणमोष्टांग उच्यते ।।
नम: सर्व हितार्थाय जगदाधार हेतवे ।
साष्टाङ्गोऽयम्प्रणामस्ते प्रयत्नेन मया कृत: ।।

विश्वास ही शक्ति है
श्रद्धा ही भक्ति है ।
सेवा ही जप है
श्रम ही तप है ।

❖ प्रकाशन ❖

महावीर प्रसाद सोढ़ानी
मुम्बई - ४०० ०९०.

❖ न्योछावर ❖

श्री गुरु चरणोमें

...क : Anupam अनुपम प्रिन्टर्स ॲण्ड स्टेशनर्स, ✆ ८७३०८०० / ५५१५